


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका
आगस्ट् २०२० रू.५/-

गोविन्दाश्रित गोकुल बृन्दा
पावन जय जय परमानन्दा

गोकुलाष्टमी
१२-०८-२०२०



# तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः सालकट्ल ब्रह्मोत्सवः
### २०२० सेप्टम्बर् १९ तः २७ पर्यन्तम्

**१९-०९-२०२०**
स्थिरवासरे
प्रातः ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**२०-०९-२०२०**
भानुवासरे
प्रातः लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**२१-०९-२०२०**
इन्दुवासरे
प्रातः सिंहवाहनम्
रात्रौ -
मौक्तिकमण्डपम्

**२२-०९-२०२०**
भौम्यवासरे
प्रातः कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**२३-०९-२०२०**
सौम्यवासरे
प्रातः अन्दोलिका सेवा
रात्रौ - गरुडवाहनम्

**२४-०९-२०२०**
बृहस्पतिवासरे
प्रातः हनुमद्वाहनम्
रात्रौ - गजवाहनम्

**२५-०९-२०२०**
भृगुवासरे
प्रातः सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**२६-०९-२०२०**
स्थिरवासरे
प्रातः रथोत्सवः
रात्रौ - अश्ववाहनम्

**२७-०९-२०२०**
भानुवासरे
प्रातः चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



## गीतामृतम्

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्।।

(भगवद्गीता १३/१)

तस्मिन् एव काले शङ्खानां धमनम्, भेरीणां ताडनम्, पणवानाम् आनकानां गोमुखानां च वदानं सम्पन्नम्, येन सर्वत्र महान् शब्दः संजातः।

# सङ्कीर्तनम्

नवनीतचोर नमो नमो
नवमहिमार्णव नमो नमो ।।नव।।
हरिनारायण केशवाच्युत श्रीकृष्ण
नरसिंह वामन नमो नमो
मुरहर पद्मनाभ मुकुन्द गोविन्द
नरनारायणरूप नमो नमो ।।नव।।
निगमगोचर विष्णुनीरजाक्ष वासुदेव
नगधर नन्दगोप नमो नमो
त्रिगुणातीत देव त्रिविक्रम द्वारक
नगराधिनायक नमो नमो ।।नव।।
वैकुण्ठ रुक्मिणिवल्लभ चक्रधर
नाकेशवन्दित नमो नमो
श्रीकर गुणनिधिश्रीवेङ्कटेश्वर
नाकजननुत नमो नमो ।।नव।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)



चरणत्रयेन बौलिरागेन यतिप्रासाभ्यां च प्रस्तुता सङ्कीर्तनेयम्।

'नवनीतचोर' इति शिखापदे बालकृष्णकीर्तनं वस्तु। बालेनैव कृष्णेन अनेके महिमानः प्रदर्शिषताः। अत एव 'नवमहिमार्णव' इति प्रयोगः।

'हरिनारायण' इति प्रथमचरणे श्रीकृष्णस्य सर्वोत्कट्यं प्रतिपादितमन्नमाचार्येण।

'हरति पापानि' इति हरिः। हरिनामस्मरणेन सर्वपापहरणमिति लोकविदितं सत्यम्।

# पर्वदिनानि परमपावनानि

स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम्।।
ततस्तं म्रियमाणं तु काष्ठपाषणसन्निभम्।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम्।।

धर्मसंस्थापनार्थं सद्भक्तानां परिरक्षणार्थं खलानां विनाशनार्थं च प्रत्येकं युगे सम्भवामि इति साक्षात् भगवान् श्रीकृष्णः भगवद्गीतायाम् अवदत्। श्रीमहाविष्णोः दशावतारेषु वराहावतारः अन्यतमः भवति। उपर्युक्तः दिव्यश्लोकः भगवता वराहस्वामिना प्रोक्तः। हिरण्याक्षेन अपहृतां भूदेवीं संरक्ष्य भगवान् वराहमूर्तिः स्वयं एनं चरमश्लोकं भगवत्यै भूदेव्यै उपदिष्टवान्। अहमेव एतस्य जगतः कारणमिति सम्भाव्य यः मयि श्रद्धां दत्वा मय्यैव सृष्टिस्थितिलयादिकं भवतीति विश्वस्य मम शरणागतः भवति, तं अन्त्यकालस्थं काष्ठपाषाणतुल्यं भक्तम् अवश्यम् अहं पुण्यगतिं नयामि इति भगवता वराहस्वामिना उक्तम्। भाद्रपदशुक्लतृतीयायं वराहजयन्तिमहोत्सवः भक्त्या समाचर्यते।

श्रावणाभाद्रपदमासौ अस्मिन् आगस्ट् मासे भवतः। श्रावणमासस्य वैशिष्यं महदिति विदितचरोऽयं विषयः। श्रावणशुक्लचतुर्थ्यां नागचतुर्थीपर्व वर्तते। श्रावणबहुळ-अष्टम्यां श्रीकृष्णाष्टमीपर्व भवति। पुण्यतिथौ श्रावणपूर्णिमायां सर्वविद्याप्रदायकस्य भगवतः हयग्रीवस्य जयन्तिमहोत्सवः भक्तैः समाचर्यते। श्रावणपूर्णिमायाम् एव संस्कृतभाषादिवसः परिपाल्यते। संस्कृतसप्ताहमहोत्सवः समाचरणीयाः इति भारतसर्वकारेण सूचना दत्ताः।

भाद्रपदमासे विनायकचतुर्थी वर्तते। विनायकचतुर्थ्यां प्रचाल्यामान- एकविंशतिपत्रपूजा प्रकृतेः वैशिष्ट्यं बोधयति। बालगङ्गाधरतिलकमहोदयेन आरब्धस्य विनायकचुतर्थीसामूहिकमहोत्सवः अद्यावधि सम्यक् प्रचलति। अनेन एकताभावनायाः वृद्धिरपि भवति। यदि जागरूकतया पश्यामः चेत् ज्ञायते यद् पर्वदिनेभ्यः प्रकृते आराधना कारणीया इति। अपि च समाजे अस्माभिः सह विद्यमानानां पशुपक्षिवृक्षेषु गौरवभावना भवेदिति। प्रकृतिः भगवतः रमणी सृष्टिः भवति। एतस्याः रक्षणम् अस्माकं कर्तव्यं भवति। प्रत्येकस्य पर्वदिनस्य अर्थः पश्चाात् अन्तरार्थः अन्ततो गत्वा परमार्थश्च भवन्ति।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रात्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०५


# आगस्ट् -२०२०

श्रीशार्वरि नाम संवत्सरस्य श्रावण शुक्ल त्रयोदशी तः भाद्रपद शुक्ल त्रयोदशि पर्यन्तम् - १९४१



मुखचित्रम् - नवनीतकृष्णः (तिरुमल)
अन्तिमरक्षापुटः - विखनासाचार्यः


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-





# श्रीवरसिद्धिविनायकव्रतम्

- एन्.उमादेवी, चरवाणी - ९९५१७३४४९४

**प्रतिसंवत्सरं भाद्रपदशुक्लपक्ष चतुर्थ्यां वरसिद्धिविनायकव्रतं प्रचलति। तस्मिन् दिने सकल विघ्नविनाशकः वरसिद्धिविनायकः नानाविधपरिमल पत्रपुष्पैः सकलजनैः आराध्यते।**

पूर्वकाले चन्द्रवंशे प्रसिद्धः धर्मराजः राजा आसीत्। स्वस्य ग्रहचारवशात् तस्य राज्यं दायादिभिः अपहृतम् अभवत्। स राजा सोदरैः भार्यया सह अनेक वृक्षैः पक्षिभिः व्याघ्रभल्लूकादि बहुविधभीकरैः मृगैः युक्तं अतिगहनं अरण्यं प्राविशत्। तत्र तत्र आसनेषु ब्रह्मवादिनः मुनयः उपविष्टाः आसन्। ते सर्वे सूर्याग्नि समप्रभाः तेजो राशि सदृशाः वायु पत्र जलभक्षकाः सदा अग्निहोत्र उपासकाः, नित्यं अतिथि पूजकाः, ऊर्ध्वबाहु निरालम्बाः मुनिगणाः तपमाचरन्तः आसन्। धर्मराजः तान् मुनीन् दृष्ट्वा सन्तुष्टान्तरङ्गः सूतमहर्षेः आश्रमं गत्वा तं दृष्ट्वा ससंभ्रमं भ्रातृभिः पत्न्या साकं मुनीन्द्रं नमस्कृत्य तस्य आज्ञया उपविष्टः सूतमहामुनिं एवमवदत्। हे सूतमुने! सर्वशास्त्र विशारद महाप्राज्ञ दयासागर अस्माकं दायादाः कौरवाः अस्माभिः कपट द्यूत क्रीडया अस्माकं सकलं राज्यंसंपदश्च अपहृत्य अस्मान् द्रौपदीं च बहुप्रकारं बाधमानाः अस्माकं पुत्रान् हत्वा अतीव दुःखं वेदनां च जनयामासुः। अद्य भवद्दर्शन प्रभावेण अस्माकं समस्तं दुःखं दूरीकृतम्। हे महात्मन्! अस्मासु कृपया पुनः नः राज्यं लब्धुं साधन भूतं एकं व्रतं अनुगृह्णातु इति धर्मराजः सूतमुनिं प्रपच्छ। अनन्तरं सूतमुनिः उवाच।

व्रतं संपत्करं नृणां सर्वसौख्य प्रवर्धनम्।
शृणुध्वं पाण्डवाः सर्वे व्रतानामुत्तमं व्रतम्।।
रहस्यं सर्वपापघ्नं पुत्रपौत्राभिववर्धनम्।
व्रतं साम्बशिवेनैव स्कान्दस्योद्बोधितं पुरा।।
हेमसिंहा सनासीनं शङ्करं लोकशङ्करम्।
पप्रच्छ षण्मुख स्तुष्टो लोकानुग्रहकाङ्क्षया।।

सत्राजित् नामकः राजा भगवतः सूर्यस्य वर प्रभावेण अत्यन्त महिमान्वितं स्यमन्तकमणिं लेभे। एकदा सत्राजित् श्रीकृष्ण दर्शनार्थं द्वारका नगरम् अगमत्। श्रीकृष्णः अतीव प्रकाशमानं स्यमन्तकमणिं जनानां हिताय सत्राजितं याचितवान्, राजा तं मणिं प्रदातुं निराकरोत्। ततः किञ्चित् कालानन्तरं सत्राजितः अनुजः तं मणिं धृत्वा मृगया विनोदार्थम् अरण्यं जगाम। अरण्ये तं मणिं सिंहः दृष्ट्वा सत्राजितः भ्रातरं हत्वा मणिना साकं गच्छता मार्गे जाम्बवान् तं सिंह हत्वा मणिं स्वीकृत्य स्वस्य गुहां प्रतिगतवान्।



ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।

श्रीकृष्ण एव स्यमन्तकमणिम् अपेक्षमाणः स्वस्य भ्रातरं हतवानिति सत्राजित् सम्भावितवान्। अमुं विषयं लोक रक्षकः श्रीकृष्णः ज्ञात्वा विनायक चतुर्थ्यां क्षीरे चन्द्रदर्शनात् एषा अपनिन्दा संप्राप्तेति श्रीकृष्णः स्वस्य अनुजेन बलरामेण उवाच। तस्मिन् दिने चन्द्र दर्शनात् विपदः किमर्थं सम्भवन्ति इति श्रीकृष्णं बलरामः पृष्टवान्।

**श्रीकृष्णः उवाचः -**

हे अग्रज! कैलासे एकस्मिन् दिने विनायकं कुब्जरूपे प्रकाशमानं दृष्ट्वा चन्द्रः परिहसितवान्। ततः विनायकः चन्द्रं दृष्ट्वा हे चन्द्र! त्वाम् अस्यां चतुर्थ्यां यः मानवः पश्यति सः निन्दापवादाभ्यां युक्तः भवेत् इति शशाप। अनन्तरं चन्द्रः दीनोभूत्वा स्वस्य अपराधं क्षन्तव्यमिति प्रार्थितवान्। विनायकः ''चन्द्रस्य ईश्वर आज्ञा प्रकारं भाद्रपदशुक्लचतुर्थ्यां मां यथाविधि कल्पोक्तप्रकारेण सम्पूज्य व्रतं कुर्वाणेभ्यः अपनिन्दायाः विमुक्तिः भवेत्।'' तथा शतृजयं, पुत्रपौत्राभिवृद्धिः धनधान्यसमृद्धिः मोक्षप्राप्तिः सिद्ध्यन्ति इति चन्द्रमसे अवादीत्। चन्द्रादयः ग्रहाः



दिक्पालाश्च एतत् व्रतं कारितवान्। अनन्तरं श्रीकृष्णः यथा विधि वरसिद्धि विनायकव्रतं कृत्वा विनायकं प्रणम्य जाम्बवन्तः समीपं गते सति सः स्यमन्तकमणिनां साकं स्वस्य पुत्रीं जाम्बवतीमपि श्रीकृष्णाय दत्वा विवाहं कृतवान्। श्रीकृष्णः स्यमन्तकमणिं सत्राजिताय समर्प्य अपनिन्दातः विमुक्तः अभवत्, सत्राजित् इतः पूर्वं प्रवृत्तम् उदन्तं ज्ञात्वा स्वस्य पुत्रिकां सत्यभामाम् अपि श्रीकृष्णाय दत्वा परिणयमकरोत्।

अस्माकं भारतीयानां वेदाः, उपनिषदः धर्मशास्त्रम्, इतिहास पुराणादीनि मुख्यानि विराजन्ते। मानवानां चतुर्विधपुरुषार्थानां (धर्मार्थकाममोक्षाणाम्) सम्पदाने वेदादयः अत्यन्तोपयुक्ताः भवन्ति। प्राचीनकाले व्यासवाल्मीकादयः महर्षयः इतिहास पुराणागम ग्रन्थ रचनाभिः जनेषु ज्ञानवैराग्यभक्तिभावान् उत्पादयामासुः।

पूर्वं गौतम आपस्तम्ब मन्वादयः महर्षयः वर्णधर्माणाम् आश्रमधर्माणाञ्च परिरक्षणाय धर्मसूत्र स्मृतिरूपेण ग्रन्थान् विरचयामासुः। राजा तेषामनुगुणं धर्मपालनं कृतवान् - प्राचीनकाले वरसिद्धिविनायकव्रतं देवमुनि गन्धर्वकिन्नरकिंपुरुषादयः आचरन्। अस्य व्रतस्य आरचणेन धर्मराजः शतृन् जित्वा स्वराज्यं लब्धवान्। दमयन्तीनलं परिणीतवती, श्रीकृष्णः अस्य व्रतस्य आचरणेन स्यमन्तकमणिं जाम्बवतीञ्च अलभत। श्रीरामः रावण संहारं कृत्वा सीतां लब्धवान्। साम्बः सिद्धिविनायक प्रसादात् कृष्ठुरोगात् विमुक्तः अभवत्।

वेदपुराणानुसारम् अस्माकं भारतीयानां बहवः व्रतोत्सवाः विविधकालेषु आचरणीयाः निर्दिष्टास्सन्ति। तेषां फलञ्च अमोघम् अद्भुतं च वर्तते। परमशिवः विनायकस्य गणाधिपत्यं दत्तवान्। अतः सर्वैः गणनायकः प्रथमं सम्पूज्यः। गणनायकस्य आराधनेन सर्वविघ्नपरिहारः कार्यसिद्धिः सर्वत्र विजयः च भवति भविष्यति।



# श्री वामन जन्मदिनोत्सवः

-डा.माडुगुल अनिल् कुमार्,
चरवाणी - ९६४०३२९५६५

भगवन् परिशुद्धः, ज्ञानमयः सर्वान्तर्यामी, परिपूर्णः, अद्वितीयः, निर्गुणः, नित्यः, आद्यन्तरहितश्च। आदिपुरुषः भगवान् जन्मरहितोऽपि प्रतिकल्पं स्वात्मन्येव स्वयमुद्भूय स्वकीयं शरीरं पोषयन् स्वकीयं देहं संहरति च। एवं भगवतः त्रयोविंशत्यवताराः विद्यन्ते। तेष्वपि -

प्रह्लादस्य पौत्रः, विरोचनस्य पुत्रः बलिचक्रवर्ती। यथा पितामहः तथा बलिचक्रवर्ती अपि पुराणप्रसिद्धः महान् विष्णुभक्तः दानवीरश्च।

दैत्यराजः बलिः देवगणैः युद्धे पराजितोऽभवत्। तेन कारणेन सः खिन्नो जातः। पुनः देवराज्यलक्ष्मीं प्राप्तुः सः राक्षसगुरुं शुक्राचार्यं समाश्रितवान्। विनयगुणान्वितेन वैरोचनबलिना समर्चितः शुक्राचार्यः सन्तुष्टो भूत्वा तस्य हितार्थं विश्वजिन्नामकं यज्ञमारेभे। तद्यज्ञप्रसादरूपेण बलिः सुवर्णोपेतं महारथं, इष्वादि शस्त्रादीन् च प्राप्तवान्। तदनन्तरं महाबलसम्पन्नः बलिचक्रवर्ती देवतैः योद्धुं ससैन्यं देवराज्यम् अमरावतीं जगाम।

सागरोपमं राक्षससैन्यं दृष्ट्वा किङ्कर्तव्यतामूढः इन्द्रादिदेवगणः देवगुरुं बृहस्पतिमुपगम्य मन्त्रालोचनं चकार। असुरबलादपि निर्जराणां बलं न्यूनमिति परामृश्य सुरगूरुः



बृहस्पतिः सुरगणं नगरं त्यक्त्वा अन्यत्र वसन् समुचित कालाय निरीक्षयेदिति सूचयामास। तदेव समयोचितं मत्वा इन्द्रः समस्तपरिवारजनैः सह स्वर्गं परितत्याज। तदा बलिचक्रवर्ती स्वर्गलोकमाक्रम्य सानन्दं परिपालयामास।

राज्यभ्रष्टान् स्वपुत्रानालोक्य देवमाता अदितिः दुःखोद्विग्नमनसा पतिं कश्यपमुनिं सस्मार। महामुनिः कश्यपः तत्रागत्य पत्न्याः दुर्दशां वीक्ष्य दयार्द्रचेतसा तां मनोभीष्टप्रदं व्रतश्रेष्ठं पयोव्रतमुपादिशत्। द्वादशवर्षपर्यन्तं पयोव्रतमनुष्ठमानायां सुरमातरि सन्तुष्टः श्रीमन्नारायणः प्रत्यक्षीभूय - "हे देवि! चिन्ता मास्तु। अहं तव पुत्रत्वेन सम्भूय इन्द्राय राज्यं दापयिष्ये" इत्यवोचत्।

श्रोणायां भद्रद्वादश्यां मुहूर्तेऽभिजिति प्रभुः।
सर्वनक्षत्रतारादूयाः चक्रुस्तत् जन्म दक्षिणाम्।
द्वादश्यां सवितातिष्ठन् मध्यन्दिगतोडिन।
विजयानाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः।।

श्रीद्भागवतम् -८-१८-५,६

एतदनुसारं अनतिकाले एव भाद्रपदमासे शुक्लपक्षे श्रवणानक्षत्रे द्वादस्याम् अभिजिन्मुहूर्ते श्रीमन्नारायणः अदित्यां पुत्ररूपेण अजायत। भगवतः वामनावतारेण सन्तुष्टाः मुनयः प्रजापतिं कश्यपं समाहूय वामनमूर्तेः जातकर्मनामकरणादि संस्कारान् कारयामासुः। वामनस्य उपनयनसमये गायत्र्यधिष्ठातृदेवता सविता स्वयं तस्मै गायत्री मन्त्रोपदेशं चकार। बृहस्पतिः ब्रह्मसूत्रं, काश्यपमहर्षिः मेखलां, भूदेवी कृष्णाजिनं, चन्द्रमाः दण्डं, माता अदितिः कौपीनं, आकाशवाणी छत्रं, ब्रह्मा कमण्डलुं, सप्तर्षयः कुशाः, सरस्वती अक्षमाला, कुबेरः पवित्रं, पार्वती भिक्षा च प्रददुः। अनया रीत्या वामनमूर्तेः उपनयनसंस्कारः समभवत्।

महाविष्णुभक्तः बलिचक्रवर्ती स्वर्गलोकाधिष्ठितोऽपि यज्ञकर्मदिनचर्यां न विस्मृतवान्। प्रतिदिनं अवभृथस्नानानन्तरमवश्यं दानं करोति स्म। स्वभक्तः बलिः इति विचिन्त्य बलिविषये सामादयुपायेष्वन्यतमं दण्डनं प्रयोक्तुं श्रीमहाविष्णुः नैव अभिलषति। वञ्चयित्वा एव बलिं निग्रहेदिति भगवतः निर्णयः। अतः श्रीमन्महाविष्णुः दण्डकमण्डलोपेतः छत्रधरः वामन भूत्वा ऋत्विजादि समलङ्कृतां बलेः यज्ञशालां प्राप्तवान्।

ब्रह्मतेजोमयं वटुं प्रेक्ष्य यज्ञदीक्षितः बलिः तमर्घ्यपाद्यादिभिः समर्चयत्। यज्ञसमये अभ्यागतं वामनं राजा बलिः स्वस्य ऐश्वर्यवर्णनं कुर्वन् निस्सङ्कोचं दानं याचितुमभ्यर्थयामास। राज्ञः आतिथ्येन सुप्रीतः वामनः बलिवंशजानामौदार्यं प्रशंस्य त्रिपादपरिमाणं धरणीं याचितवान्। तच्छ्रुत्वा बलिः बालस्य बालिशबुद्धिरेव इति उपहसन् काञ्चनगजगवाश्व राज्यादीन् याचितुं पुनः सूचितवान्।

तदा राक्षसगुरुः शुक्राचार्यः वामनं दृष्ट्वा मायावी विष्णुरेव त्वां वञ्चयितुमागत इति बलिचक्रवर्तिनं प्रबोधितवान्। एषस्तु वामनरूपेण साक्षाद्विष्णुरेव असुरकुलनाशनार्थमागतः इति वदन् दानसङ्कल्पं त्यक्तुं बलिम् आदिदेश। तथाऽपि बलिः दृढचित्तः सन् वटुः विष्णुर्वा भवतु अन्यो वा भवतु, अहं तु वचनभ्रष्टः न भविष्यामीति वदन् शुक्राचार्यस्य सूचनां तिरश्चकार। तेन कुपितः शुक्रः ब्राह्मणवचनं तिरस्कुर्वन्तं बलिं शीघ्रमेव सकलैश्वर्यविहीनो भव इति शशाप।

बलिः विधिपूर्वकं दानसङ्कल्पमकरोत्। वामनस्तु "हे बले! भवान् दानवीरेषु अग्रतमः इति जानामि। अत एव भवता त्रिपादपरिमितधरणीमेव याचे" इत्यवोचत्। तेन सन्तुष्टः बलिः वामनाय पादत्रयपरिमितभूदानं कर्तुं जलकलशमानीय स्वपत्न्या विन्ध्यावल्या सह दानार्थं संसिद्धोऽभवत्। बलेः दानसमये शुक्राचार्यः कमण्डलोः नालिकायां पिपीलिका रूपेण अवरोधं कृत्वा जलधारां निरोधितवान्। तदा वामनः नालिकायां दर्भपुञ्जनप्रोगं कृतवान्। तेन कारणेन शुक्राचार्यस्य नेत्रमेकं स्फुटितमभवत्। सद्य एव शुक्रः बहिरागत्य क्षमामयाचत। एकाक्षी सन्नपि वामनस्य त्रिविक्रमत्वं द्रष्टुं भगवतः अनुग्रहं प्राप्तवान्। ततः वामनः प्रसन्नो भूत्वा। त्रिविक्रमावतारमधारयत्। क्रमक्रमं वामनः स्वरूपं प्रवर्धमानः लोकत्रयं व्याप्य तस्थौ। प्रथमपादेन सम्पूर्णभूलोकं, द्वितीयपादेन समस्त द्युर्लोकमपि आक्रमितवान्। वामनाज्ञानुसारेण गरुडः बलिं वरुणपाशे बबन्ध।

ततः वामनः - "पादद्वयेन त्वयाऽर्जिताः सकललोकाः मया हृताः, तृतीयपाददानार्थे किमपि नावशिष्टम्। वचनच्युतोऽसि" इति बलिमवदत्। सत्यसन्धः बलिः नतमस्तकः शिरसि तृतीयपादं स्थापयितुं वामनं प्रार्थयामास। बलेः दैन्यावस्थामवलोक्य तस्य पितामहः प्रह्लादः तत्रागत्य वटुवेषधारिणं नारायणमस्तुवत्। भक्तप्रह्लादस्य प्रार्थनया सन्तुष्टो वामनः बलिं बन्धनात् मुमोच।

त्रिविक्रमावतारं पश्यन्तः देवगन्धर्वादिगणाः वेदामन्त्रैः भगवन्तमस्तुवन्। चतुर्मुखब्रह्मा श्रीहरिपादप्रक्षालनं कृतवान्। तस्मादुत्पन्ना पवित्रपयोधारा स्वर्गङ्गा त्रिषु लोकेषु प्रावहत्। तदनन्तरं सर्ववन्द्यः वामनः विश्वरूपं परित्यज्य पुनः मानवाकृतिं दधार। हरेः सर्वलोकानामपहरणं दृष्ट्वा सायुधः राक्षसगणः वामनं हन्तुम् अधावत्। तदा देवतास्सर्वे तैः सह युद्धमकुर्वन्। बलिः शुक्राचार्यस्य शापं स्मृत्वा राक्षसान् युद्धात् निवारितवान्। राक्षसराजस्य बलेः स्थैर्येण परमप्रीतः भगवान् वामनः बलिं स्वपरिवारजनैः सह रसातले निवसितुमादिदेश। सावर्णि मन्वनन्तरे इन्द्रपदवीमपि बलिचक्रवर्तिने प्रदत्तवान्। एवं बलिचक्रवर्ती स्वपरिवारजनैः सह रसातलमगच्छत्। इन्द्रः पुनः स्वर्गाधिपत्यं, भगवदनुग्रहञ्च लेभे। आलोच्यमाने अस्मिन् वृत्तान्ते ज्ञातव्यं भवति यत् -

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः।
ततोऽधनं सन्त्यजन्ति स्वजना दुःखदुखितम्।।
स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम्।।

भागवातम्.१०.८८.०८.९

इति भगवदुक्तिः। एतद्वचनानुसारं श्रीमहाविष्णुः स्वभक्तस्य बलेः सर्वस्वमपि अपहृत्य पुनः तदप्यधिकामिन्द्रपद - वीमलङ्कर्तुमवकाशं दत्तवान्।

जाग्रत्सुषुप्तिस्वप्नावस्थात्रयमेव पादत्रयम्। एतदवस्थात्रयमेव जीवस्य सर्वस्वं भवति। एतत् त्रयं ममकारस्य कारणं भवति। यः एतत्स्वसर्वस्वमपि भगवदर्पणं करोति, तस्य योगक्षेमं भगवानेव पश्यति। इमं विषयं विष्णुभक्तपरायणः बलिः सम्यक् जानाति। स्वयं श्रीहरिः वामनरूपेणागतवानिति ज्ञात्वाऽपि बलिः स्वस्य प्रतिज्ञां न परित्यजति। अत एव शुक्राचार्येण निवारितोऽपि - "विप्राय प्रकटव्रताय हरये त्रिपादधरणीं दास्यामि" इति वदन् पादत्रयभूदानमकरोत्। पादद्वयेन भूम्याकाशयोराक्रमणानन्तरं बलि शिरसि वामनस्य तृतीयपादनिक्षेपणं बलये विष्णुसायुज्यप्रदानमेव भवति। एवं बलेः विष्णुभक्तिः सुस्थिरा भवति। बलिः नवविधभक्तिमार्गेषु अन्यतमस्य आत्मनिवेदनस्य सङ्केतो भूत्वा विराजते।

श्रीमद्भागवतानुसारं भाद्रपदमासे शुक्लपक्षे द्वादशी तिथौ श्रवणा नक्षत्रे भगवतः वामनस्य आविर्भावः जातः। तस्मात् अस्मिन् दिने विधिप्रकारं भगवतः श्री वामनस्य षोडशोपचारपूर्वकपूजनं कुर्वन्ति। अस्मिन् दिने वामन व्रतं कृत्वा भगवतः वामन व्रतकथामवश्यं श्रुणुयात्। अनेन भक्तानां जीवने सर्वाः समस्याः विनश्यन्ति। वामनः भक्तानां सर्वमनोरथान् पूरयिष्यति।






# कर्तारमनुसृत्य कर्मफलं


तेलुगु मूलम् - डा।। वैष्णवांघ्रि सेवकदासः
संस्कृतानुवादः सि. आदिलक्ष्मीः
चरवाणी - ९४४०२८५९८५


यत्किमपिकार्यं विजयं प्राप्तुं अथवा अपजयं प्राप्तुं प्रप्रथमकारणं कर्तुरेव। एतद् सर्वे जानन्त्येव। यः कोऽपि असाध्यकार्यमपि केचन व्यक्तयः स्वहस्तप्रधानेन सम्पूर्णं सानुकूलं भविष्यति। केचनसमानकार्याणि केचनहस्तदानेनालं सर्वनाशनं भविष्यति। अतः कार्यसाफल्ये कर्तुः पात्रं प्राधान्यं भवति। एतद्विषयावगाहिनः कर्तुर्विषये सावधानतया प्रवर्तन्ति। येषां यद्यत्कार्यदातव्यमित्यस्मिन् विषयावगाहिनः कार्यसाधने सफलत्वं प्राप्नुवन्ति। पुनः तत्र बन्धुप्रीत्या अथाव पक्षपातततया अथवा यः कोऽपि कारणेन अयोग्यस्य कार्यभारं प्रधानेन तत्कार्यं निश्चतया विफलतां प्राप्नोति। एवमेव कार्यविषये अस्माकं व्यक्तिगतचर्चायां अस्माकं कार्याणि अन्यैः कर्तुं अवकाशं न भवति। अस्माकं कार्याणि अस्माभिरेव करणीयम्। परन्तु केषाञ्चनविषये यत्किमपिकार्यं स्वीकरणानन्तरं विफलं अथवा अर्धजयं वा सम्भवति। तदानीं ते किं कुर्वन्ति? भगवद्गीतामाश्रयित्वा मार्गदर्शनं स्वीकरणमेव एकैकं मार्गं भवति।

मानवः यस्मिन् स्थितौ स्वसमस्यं सृष्टितवान् तस्मिन्नेवस्थितौ तत्तसमस्यायाः परिष्कारं न दातुं प्रभवति। कदाचित् कर्मणः सर्वदा विफलतां प्राप्तसमये मानवः स्वकर्माचरणपद्धतिं परिवर्तनीयम्। स्पर्धापरीक्षायां सर्वदा अपजयप्राप्तयुवकः स्वस्य स्पर्धापरीक्षानिर्माणप्रणालीं अवश्यं परिवर्तयति। कर्मणि निश्चयेन विजयितुं कर्ता कथं भवितव्यमित्येतद्विषयं भगवद्गीता प्रकटयति कर्ता प्रथमतया अनुसर्तव्यविषयः सर्वदा उत्साहतया वर्तनीयम्। अहङ्कारस्य गर्वस्य अवकाशः न दातव्यः। सः स्वकीय कष्टाणि न चिन्तयति। पुनः क्लेशात् बहिरागन्तुं परमोत्साहेन प्रवर्तयति। तस्य जयापजयौ अवरोधौ न भवतः। सुखदुःखेषु समानतया सः प्रवर्तयति। अर्थात् तादृशः पुरुषः दृढनिश्चयेन उत्सहाने स्थित्वा जयापजयेषु स्थिरतया स्वकर्मणि तिष्ठति। सैव सात्विककर्ता भवति।

पुनः साधारणतया स्थिताः कर्तारः प्रवर्तनं भिन्नं भवति। ते स्वकीयकर्मणः फले आशां स्थापयन्ति। ते कार्यसाधनविफलेष्वपि शोकमग्नाः भूत्वा, ये कार्यसाधकाः भवन्ति तेषां विषये रागद्वेषतया प्रवर्तयन्तः स्वविजयार्थं लोभतया चिन्तयन्तः अन्तबहिस्तः अशुच्या भवन्तः कर्तारः राजसिक कर्तारः भवन्ति। प्रपञ्चे अत्यधिकतया एतादृशाः एव सन्ति। एते इतरजनानां असूयतया पश्यन्ति। इतरेषां विजयमपि न सहन्ति। एते स्वसम्पादेन नीतिं, अनीतीं न गणयन्ति। विजयार्थं यत्किमपिदोषं कर्तुं लज्ञां नानुभवन्ति।

एतादृशव्यवहारशीलिनः शीघ्रतया स्वकीय प्रवर्तनं परिवर्तयितुं प्रयत्नं अवश्यं करणीयः। प्रयत्नेन सात्विककर्तारः भवितुं यत्नः विधेयः। प्रधानतया युवकाः स्वकीयं एकैकं कार्यं साधयितुं विद्याभ्यासे सात्विककर्ताररूपेण प्रवर्तयन्तः परमोत्साहेन विजयार्थिनः भवितव्यः। ते रजोगुणकर्तुः लक्षणानि दूरीकरणीयानि। ते तमोगुणलक्षणाण्यपि स्वसमीपे नागन्तुं यत्नः करणीयः। अपितु तमोगुण लक्षणानि कानि? कठोरभाषणं, अन्यानां आवमानयितुं स्वसामर्थ्यप्रकटनं, अलसत्वं, सर्वदा चिन्ताकलानयावर्तनं, वृथा कालयापनं घण्टाकाले परिसमाप्यमानकार्यार्थं संवत्सरकालपर्यन्तं समयस्वीकरणं, कार्ये असावधानाः, आवश्यककार्येषु अलसत्वं, तमोगुणकर्तुः लक्ष्णानि। ते ज्येष्ठानां वाक्यानि शास्त्रवचनानि न श्रृण्वन्ति। स्वकीयचिन्तनानुसारं कार्यं कुर्वन्ति। अनुभवज्ञानां वाक्यानि न श्रृण्वन्ति। कठोरप्रवर्तनं कपटं तेषां सहजलक्षणानि एतादृश प्रमादव्यवहारं युवकानां लाभदायकं कर्तारः न भवति। तमोगुणकर्तारः क्लेशेनापि। न भवति। रजोगुणकर्तारौ भवितव्यः। एवमेव रजोगुणपि सात्विकगुणकर्तुरूपेणैव स्थित्वा विजयधाम्नि प्रयाणं करणीयमिति आशास्महे।।



श्रीहयग्रीव जयन्ती
०३-०८-२०२०




विशुद्धविज्ञानघनस्वरूपं विज्ञान विश्राणन बद्धदीक्षम्।
दयानिधिं देहाभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये।।

भगवान् श्रीहयग्रीवः चन्द्रवत् स्वच्छशरीरकन्त्या
चतुर्भुजैः चन्द्रबिम्बेवसन् स्वकीय
अमृतमयकिरणैः ब्रह्माण्डान्तर्बहिर्भागौ प्रकाशयति

श्रीवेदान्तदेशिकः - हयग्रीव स्तोत्रम् - ५

तिरुमल श्रीवेङ्कटेश्वर स्वामिनः आलये
शास्त्रोक्तरीत्या पवित्रोत्सवः कृतः।
श्री श्री श्री चिन्न जीयंगार् स्वामिनः,
ति.ति.दे, पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि दम्पती,
ति.ति.दे. कार्यनिर्वहणाधिकारी
श्री अनिलुकुमार् सिंघाल्, ऐ.ए.एस्.,
अतिरिक्त कार्यनिर्वहणाधिकारी श्री धर्मारेड्डि दम्पती
इतर उन्नताधिकारिणः
कार्यक्रमेऽस्मिन् भागं गृहीताः।















तिरुचानूरु श्रीपद्मावती देव्याः आलये शास्त्रोक्त रीत्या

श्रीवरलक्ष्मीव्रत कार्यक्रमः सम्पन्नः।

ति.ति.दे, पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि दम्पती,

ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल्कुमार् सिंघाल्, ऐ.ए.एस्., दम्पती

संयुक्तकार्यनिर्वहणाधिकारी श्री पि.बसंत कुमार् ऐ.ए.एस्., दम्पती,

उन्नताधिकारिणः भागं गृहीताः।



















तिरुपति श्रीकोदण्डरामस्वामि आलये शास्त्रोक्तरीत्याकृत पवित्रोत्सव दृश्यानि



तिरुचानूरु श्री पद्मावती आलये वरलक्ष्मी व्रत संदर्भे ति.ति.दे., तपाला शाखा द्वारा भक्तेभ्यः प्रसादवितरणम्





# अन्नमाचार्यजीवनचरित्रम्



तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्,
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी,
चरवाणी - ९४४०८४८८५८

अन्नमाचार्यः घनविष्णोः समीपमागतवान्। भगवता अन्नमाचार्यविषये उक्तं सर्वमपि आगते बालके दृष्टवा सः एव अन्नमाचार्यः इति गृहीतवान्। तं बालकं, तस्य रूपञ्चापुरूपं दृष्टवान् घनविष्णुः। भगवतः आज्ञां पालयन् अस्मि इति आनन्दमनुभूतवान् घनविष्णुः। तं बालमाहूय अभिधानमपृच्छत् घनविष्णुः। अन्नमाचार्यः इति नाममुक्त्वा तस्मै मुनये साष्टाङ्ग नमस्कारमकरोत् घनविष्णुः। गाढान्धकारे विद्यामानाय प्रकाशः दर्शनीयः किम्? षट्पदेभ्यः पुष्पाणि प्रदर्शणीयानि वा? ज्ञानार्थये सद्गुरोः परिचयः करणीयः किम्?

अन्नमाचार्यस्य भक्तिप्रपत्तयः दृष्ट्वा घनविष्णुः सन्तुष्टो जातः। रमापत्युक्तक्रमेण वेदोक्तविध्या घनविष्णुः अन्नमाचार्यं शङ्खचक्रान्तमकरोत्। एवम् अन्नमाचार्यः घनविष्णुः वैष्णवयत्या पञ्चसंस्कारैः संस्करितः॥

## अन्नमाचार्याय वैष्णवयति संस्काराः -

भक्तसुलभः सः भगवान् एतस्य भक्तशिखामणेः गानमाधुर्येण आनन्दमनुभूतवान्। घनविष्णुः इति कश्चन वैष्णवयतिः तिरुमलायां वसति। एकस्मिन् दिने भगवान् वेङ्कटेश्वरः घनविष्णोः स्वप्ने आगत्य ''ताळ्ळपाक अन्नमाचार्यः मम भक्तः। ब्रह्मचारी, कर्णकुण्डलानपि धरति अपृष्टेसत्यपि तम्बुरां स्वीकृत्य (वाद्यविशेषं) मम नामसङ्कीर्तनं कुर्वन् गीतानि रचयन् मां कीर्तयन् अस्ति। सः श्वः प्रातः भवतः समीपमागच्छति। कालयापनामकृत्य तं 'शङ्खचक्रान्तं' कुरु इति आज्ञापयित्वा अन्तर्थानोभूत्। तथा घनविष्णुः निद्रायाः उत्थाय भगवतः कृपां बहुधा कीर्तितवान्।

स्वामिनः आज्ञा पालनीया इति धिया घनविष्णुः नित्यकृत्यानि समाप्य शङ्खचक्रमुद्रे स्वीकृत्य अन्नमाचार्याय प्रतीक्षां कुर्वन्नासीत्। तदभ्यन्तरे एव श्रीहरि पदसङ्कीर्तनं कुर्वन्

## ताळ्ळपाकायां प्रत्यागमनम् : -

पुत्रस्य अदृश्यकारणात् नारायणसूरिः लक्कमाम्बा स्वाग्रामे समीपे विद्यमानेषु ग्रामेषु अन्विष्टवन्तः। कुत्राऽपि अन्नमाचार्यः न प्राप्तः। पुत्रभाग्यप्रदाता सः वेङ्कटेश्वरः एव पुनः पुत्रं तेषां समीपं प्रापयतीति मत्वा तिरुमलां गतवन्तौ अन्नमाचार्यस्य पितरौ। तौ द्वौ सङ्कीर्तनैः श्रीवेङ्कटेश्वरमर्च्यमानम् अन्नमाचार्यं दृष्टवन्तौ। जननी पुत्रं दृष्ट्वती। दृष्ट्वा गृहमागच्छ कृपया गृहमागच्छ इति प्रार्थितवर्तो। अन्नमाचार्यः निराकृत मातुः मनः खिन्नम् जातम्। अर्चकाः अपि मातुः वेदनां दृष्ट्वा अन्नमाचार्याय गृहं गच्छतु इत्युक्तवन्तः। अत्र विद्यमानः

वङ्कटेश्वरः भवतः ग्रामेऽपि अस्ति इत्युक्तवन्तः। तथाऽपि अन्नमाचार्यः नाङ्गीकृतवान्।

तस्मिन् दिने रात्रौ अन्नमाचार्यस्य स्वप्ने श्रीवेङ्कटेश्वरः साक्षात्कृतः। हे भवत! भवतः वंशस्थाः वेदोपनिषदां साराध्यापने दक्षाः। देहंभिन्नं देहि भिन्नमिति जानातु। ज्ञातुं प्रयत्नं करोतु। जगति विद्यमानाः सर्वाः अपि जीवराशयः त्वत्समानाः इति विषयं बुद्धौ स्थापयतु। 'भारं ममोपरि संस्थाप्य, मामेव शरणं व्रज भवतः शुभं भवतु, भवतः मङ्गलं भवतु इति उद्बोध्य हे पुत्र! मातुः वचनं श्रुत्वा तया सह गच्छतु इति प्रबोधितवान्। अन्नमाचार्यः निद्रायाः उत्थाय स्वप्नवृत्तान्तं जननीजनकाभ्यामुक्तवान्। तमेव स्वप्नं आज्ञामिति मत्वा स्वग्रामं गतवान् अन्नमाचार्यः।

### अन्नमाचार्यस्य विवाहः -

जननीजनकैस्सह गृहमागतः अन्नमाचार्यः हरिसङ्कीर्तनैरेव कालं यापयति स्म। कालगमने सः युवो जातः। विवाहकालः आगतः इत्यतः अन्नमाचार्याय विवाहं कारयितुं निश्चितवन्तौ पितरौ। विवाहप्रयत्नोऽन्तर्भागत्वेन येषां कन्याः विद्यन्ते तेषां समीपं गत्वा विवाहार्थं कन्यां पृष्टवन्तः। किन्तु "सर्वदा परध्याने गोविन्द! गोविन्द इति सङ्कीर्त्यमानाय वयं कन्यां न दद्मः इति निराकृतवन्तः। लक्कमाम्बा नारायणौ भारं सर्वमपि श्रीवेङ्कटेश्वरस्योपरि स्थापितवन्तः। ततः यःकन्यां न ददामि इति अन्नमाचार्यं दूषितवान् तस्य स्वप्ने श्रीवेङ्कटेश्वरः साक्षात्कृत्य कन्यां ददतुं इति आज्ञापितवान्। तदनन्तरदिनं कृत कार्याय दूषित वचनाय च क्षमां याचयित्वा स्व पुत्र्यौ अक्कलम्मां, तिरुमल्लां च अन्नमाचार्यं दत्वा सर्वेषां समक्षे अङ्गरङ्गवैभवं विवाहं कारितवान्।



# लेखकेभ्यः स्वागतम्

सप्तगिरिमासपत्रिकायां प्रकाशनार्थं लेखनानि प्रेषयितुमर्हन्ति। लेखकाः कृपया अधोनिर्दिष्टसूचनाः अवश्यं पालयन्तु। तेन लेखानां परिशीलने, प्रकाशने च आनुकूल्यं भवति।

१. लेखनानि पत्रस्य एकस्मिन्नेव पार्श्वे लिखितं भवेत्। लेखनं मुद्रणे पृष्ठद्वयातिरिक्तं यथा न भवेत् तथा प्रेषयन्तु।

२. देवनागरिलिप्यां टङ्कणं कृत्वा यदि प्रेषयन्ति तर्हि सान्द्रमुद्रिकामपि प्रेषयन्तु। पेज्मेकर् अनु-६ मध्ये टङ्कणं कृत्वा प्रेषयन्ति चेत् उपकृताः भवेम।

3. प्रेष्यमाणं लेखनम् आत्मनः एव इत्यत्र धृवीकरणपत्रमवश्यं भवेत्।

४. लेखकाः स्वसङ्केतेन सह दूरवाणीसङ्ख्यामपि लिखन्तु।

५. रचनानां चयने, प्रकाशने च प्रधानसम्पादकस्यैव अन्तिमनिर्णयः। अस्मिन् विषये पत्रव्यवहारादिकं नानुमन्यते।

६. स्वरचनासम्बद्धचित्राण्यपि प्रेषयितुमर्हन्ति।

७. रचनायाः भाषा कठिना, दीर्घसमासयुक्ता वा मा भवतु।

८. पर्वदिनादिकमुद्दिश्य लिख्यमानं लेखनं मासत्रयपूर्वमेव प्रेषितं भवेत्।

९. लेखनस्य प्रतिस्वीकरणेच्छुकाः पर्याप्तप्रमाणेन पत्रालयचीटिकायुक्तं, मुखभागे सङ्केतेन युक्तं पत्राचारपुटकं संयोज्य प्रेषयन्तु।

१०. मुद्रितलेखनानि भगवदनुग्रहेण, पारितोषकेन च सत्क्रियन्ते।

भवतां लेखनप्रेषणार्थमस्माकं

**सङ्केतः**

प्रधानसम्पादकः
सप्तगिरिमासपत्रिका। ति.ति.दे. प्रेस् कांपौण्ड्
कपिलतीर्थं रोड्, तिरुपति
चित्तूरु - आं. प्र.
पिन् - ५१७ ५०७



# विखनसवाणी

- गंजाम् रामक्रिष्ण
चरवाणी - ९०००९२५१२५

नमो विखनसे तस्मै
नारायणतनूभवे।
येन श्रुती समालोक्य
सूत्रं हरिपरं कृतम्।।

श्रावणपूर्णिमा विखनसमुनींद्राणाम् आविर्भावदिनं पुण्यदिनं वर्तते। सनातन भारतीय संस्कृतौ आलयरूपस्य विशेषस्य परिचयः अस्मिन्नेव दिने अभूत्। साकाररूपेण भगवदर्चनायाः प्रारम्भोऽपि अस्मादेव दिनात् जातः। एवञ्च इदं दिनं विग्रहाराधनस्य मूलभूतशास्त्रस्य अवतरणकारकम्। एतेषां विशेषाणां मुख्यकारणं वर्तते विखनसमुनीन्द्राणामविर्भावः। कोऽयं विखनसमुनीन्द्रः?

'विशेषखननाज्ञातः इति विखनसः' एवञ्च 'अन्तर्हितानां वेदानां खननात् विखनसः' इति नाम व्युत्पत्तिः श्रीमन्नारायणेन स्वीयान्तः पूर्तस्य वेदराशेः निखननं कृतम् अर्थात् तस्य आलोचनया अयमुद्भूतः इति कारणात् अस्य महनीयस्य 'विखनसः' इति नाम जातम्। सृष्टि-स्थिति-लय कारकाः सः परमात्मा किमर्थं वेदराशेः निखननं कृतवान्? एवं रूपस्य प्रयत्नस्य कारणं किम्? इति विषयं विखनमुनीन्द्राणां शिष्यः मरीचिमहर्षिः एवं रूपेण प्रोक्तवान्।

''अनाद्यविद्ययाबद्धाः संसाराब्धि समुद्भवाः।
अलसा अल्प सत्वाश्च भविष्यन्ति नराः क्रमात्।।
न वेत्स्यन्ति प्रकाराणि, परव्यूहादिकानि मे।
तस्मात्तेषां विमुक्त्यर्थं सर्वलोकानुकम्पया।।

ततः -

स्वयम्भुवमनोः काले युगादी शुक्ल वत्सरे।
श्रावणे श्रावणे शुक्लपूर्णिमा सोमवासरे।
सिंहलग्ने च संयुक्ते भजे नैमिशमागतम्।।

स च महनीयः स्वायम्भुवमन्वन्तरस्य आदियुगे शुक्लनामसंवत्सरस्य श्रावणमासस्य पूर्णिमायां सोमवासरे सिंहलग्ने भूलोके नैमिशारण्यनाम्नी पवित्रस्थले आविर्भूतः। सः भृगु - मरीचि - अत्रि कश्यपान् चतुरः महर्षीन् शिष्य-रूपेण स्वीकृत्य तेभ्यः विष्णोरर्चावतारवैभवस्य, आराधनापद्धतीः च वैदिकमार्गेण उपदिष्टवान्। एवञ्च स्वयं कल्पसूत्रस्य रचनां कृतवान्। भृग्वादिभ्यः विष्णवर्चवैभवं कोटिपञ्चाशल्लक्ष श्लोकान् उपदिष्टवान्। ते च तस्मिन् स्थितं सारांशं चतुर्लक्षलोकेषु ग्रन्थस्यं कृतवन्तः। एवं विखनसमुनीन्द्रेण अनुगृहीतं शास्त्रमिति कारणात् विष्णोः आराधना सिद्धान्तस्य 'वैखानस भगवच्छास्त्रम्' इति नाम सञ्जातम्।

शास्त्रेऽस्मिन् भगवदालयनिर्माण - प्रतिष्ठा - अर्चन - उत्सव - स्नपन-प्रायश्चित्त - अष्टाङ्गयोग - भगवतत्वज्ञानविशेषाः वेदप्रमाणतया प्रतिपादिताः। तिरुमल तदितरेषु दिव्यक्षेत्रेषु अर्चामूर्तितया आविर्भूतस्य श्रीहरेः वेदोक्तकैङ्कर्याणां निर्वहणम् इममेवशास्त्रम् अनुसृत्यैव क्रियन्ते।

### ''वैखानसशास्त्रसारांशः''

प्रपञ्चस्थान् विषयान् आलोचना नाम रूप - क्रिया भेदेषु त्रिधा विभागं कर्तुं शक्यते। 'नामरूपे व्याकरवाणी' ति उपनिषद्वचनम्। अत्र नाम इत्युक्ते आलोचना इति भावः। नानाविधाः आलोचनाः विविधरूपेषु परिणतिं प्राप्य विविधक्रियाणां निर्वहणम्।

अर्चावताररूपेण लोकेस्मिंश्चतुराननं।
अवतारं करिष्यामि, भूम्या लक्ष्म्या समन्वितः।
मदर्चनार्थं सृष्ट्यादी सृज्यत्वं मुनिसत्तमम्।।

चतुर्मुखब्रह्मणः श्रीमन्नारायणस्य च मध्ये जातस्य सम्भाषणमिदं वर्तते।

'हे चतुरानन! अविद्यया युक्ताः मनुष्याः संसारबन्धने निबद्धाः सन्तः मोक्षप्रयत्ने आलस्यं दर्शयन्तः सन्ति। ते मम पर व्यूह-विभव-अन्तर्यामी तत्वान् अवगन्तुं न समर्थाः भवन्ति। अतः तेषामनुग्रहणार्थं श्री देवीभ्यां सहितः सन् अहं भूलोके अर्चारूपेणावतरितुं सङ्कल्पितवान्। मम तदपी अर्चारूपस्य आराधनानिमित्तं मुनिपुङ्गवमेकं सृजनं करोतु' इति ब्रह्मदेवाय श्रीमन्नारायणः निवेदितवान्।

ततः ब्रह्मदेवः 'तवाराधना मार्गः कीदृशः भवेत्? कीयत् प्रमाणसिद्धः, वेदसम्मतश्च भवेदिति निर्णेतुं दुर्लभः विषयः। तद्पविधेः निर्वहणाय ममापेक्षया ज्येष्ठस्य (अधिकशक्तिसम्पन्नस्य) सृष्टिः कर्तव्यः तदर्थमहमसमर्थः' इति सूचितवान्।

''तस्य तद्वचनं श्रुत्वा देवदेवो हरिस्वयम्।
चिन्तयित्वा सृजद्विष्णुः स्वाराधनपरं मुनिम्
वेदान्ततत्वमीमांसाखननं कृतवान् प्रभुः।
स्वांशभूतो हि भगवान् सञ्जातो मुनिपुङ्गवः।।
रूपलक्षण सौन्दर्य तेजोवद्दिव्यविग्रहः।।

उपयुक्तैः वचनैः अवगम्यते यत् साक्षात् श्रीमन्नारायणः एव स्वीयार्चावतारस्य आराधना पद्धतिं वेदवेदाङ्गान् खनयित्वा (शोधयित्वा) स्वीयांशतया दिव्यमङ्गलरूपेण अत्यन्तसौन्दर्ययुतः सन् आविर्भूतः। खननमाध्यमेन उद्धृतः इति कारणात् विखनसः इति नाम जातम्। एव प्रपञ्चः। वेदोक्त यज्ञकर्माणि स्वर्गादि विशेषफलान् प्रसादयन्ति परन्तु शाश्वतविष्णुसायुज्यरूपी मोक्षहेतुतया कोऽपि यज्ञः न प्रतिपादितः। वेदान्तभागरूपेषु उनिषत्सु सर्वकर्मणां त्यागपूर्वकम् आत्मतत्वस्योपरि दृष्टिं दत्वा श्रवण मनन निदिध्यासादीनां माध्यमे साधितुं शक्यते इति ज्ञापितम्। तदात्मतत्वं सामान्य मानवाः नावगच्छन्ति। अल्पज्ञाः वयं नामरूपजीवनं निर्वहणं कुर्वन्तः स्मः। यदि ताः एव नाम रूप क्रियाः भगवते समर्पयामः अथवा ताभिरेव नाम रूप क्रियाभिः भगवदर्चना कुर्मः तर्हि मोक्षः सम्भवः इति विखनसमुनीन्द्रस्य वचनम्।

आत्मक्रीडा आत्मरति क्रियावान् ब्रह्मविदां वरिष्ठः' इति मुण्डकोपनिषदः वाक्यम्। स्वीयात्मनि अन्तर्यामिरूपेण स्थितस्य परमात्मनि भक्तिं प्रदर्श्य तेन सह यः क्रीडति सः ब्रह्मवेत्तासु वरिष्ठः इत्युच्यते। नाम रूप क्रियाभिः पूर्तेऽस्मिन् जगति, आत्मनि अन्तर्यामितया स्थितस्य परमात्मतत्वस्य दर्शनं कृत्वा तस्मिन् प्रेम - क्रीडादि व्यवहाराः कथम्? इति प्रश्नस्य समाधानमेव विखनसवाणी -

भक्त्या भगवन्तं नारायणमर्चयेत् तद्विष्णोः परमं पदं गच्छतीति विज्ञायते।

'सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चान्निर्गुणमाश्रित्य मोक्षे नित्यं यत्नं कुर्यात्।

एनान् एव महावाक्यान् विखनसमुनीन्द्रः उपदिष्टवान्। भक्त्या भगवत्स्वरूपं नारायणं सगुणरूप अर्चयन् सन् निर्गुण - सर्वव्यापक परमात्मतत्वस्य आश्रयणं मोक्षप्रापकमित्यानि धैर्यवचनान् उपर्युक्तवाक्यैः मानवानां कृते अनुगृहीतवान्। अत्र आर्चमाणकर्मभिः प्रेरकः परमात्मा अनुभूतिं प्राप्नुयात्

''कर्मण्यकर्म यः पश्येत् अकर्मणि च कर्म यः
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्न कर्मकृत्।।
अनाश्रितः कर्मफलं, कार्यं कर्म करोति यः।
स सन्यासी च योगी च, न निरग्निर्न चाक्रियः।।

इत्यादि गीतावचनैः प्रतिपादितं निष्कामकर्मानुष्ठानमेव विखनसनमुनीन्द्रः श्रवण कीर्तन विष्णोः स्मरण-पादसेवन अर्चन वन्दन दास्य सख्य आत्मनिवेदनमिति भक्तिमार्गस्य द्योतकम् लयवैभवं प्रसादितवान्।

नामरूपात्मकजगति परमात्मत्वाविष्करणकारकः महनीयः विखनमुनीन्द्रः एव। भगवल्लीलाविनोदयुतं समस्तं जगत् परमात्मास्वरूपमेव इति पञ्चभूतात्मकप्रकृतिः लक्ष्मीः इति, तस्याः लक्ष्याः शक्त्या भगवान् जगदिदं लीलामात्रया सृष्टवानिति तस्मिन् नाम रूप क्रिया सत्व-रज-तमोगुणात्मकाः इति, त्रिगुणात्मकप्रकृतौ गुणातीतस्य कल्याणगुणसम्पन्नस्य श्रीहरिसन्दर्शनमेव निजजीवन्मुक्तस्य तत्त्वमिति, देहावसाने वैकुण्ठप्राप्तिरेव मोक्षमिति एवञ्च नानाविधान् वेदवेदान्तशास्त्रतत्वान् सुलभमार्गेण महनीयः विखनमुनीन्द्रः सुबोधं कारितवान्।

तैरनुगृहीतं वैखानसशास्त्रम् अद्य लोकोपकारी भूत्वा विराजते। शाश्वततया पृथिव्यामस्यां शास्त्रमिदं प्रकाशमानं भवतीति, तस्य प्रतिज्ञा सत्यसङ्कल्पितः सन् विलासते इति आकांक्षामहे।

**वैखानसार्यदिव्यज्ञा वर्धताम्। अभिवर्द्धताम्।।**





# श्रीकृष्ण जयन्ति

- प्रियंवदा राघवान्, चरवाणी - ८००८१४०१३९

श्रियः पति श्रीविष्णुः विविध अवतारान् धृतवान्। ते दशावताराः इति नाम्ना प्रसिद्धाः। तेषु त्रेतायुगे रामावतारः, द्वापरयुगे कृष्णावतारश्च पूर्णावतार रूपेण लोकप्रसिद्धाः। अवतार पुरुष चरित्रेषु अद्भुत प्रदर्शनादिकं सामान्यम्। अवतारेषु भगवता क्रियमाणानि अद्भुतानि भगवतः लीलाः इच्युच्यन्ते। तेषु कृष्णावतारे विद्यमानाः बहुविधलीलाः अतिप्रसिद्धाः। श्रीराम, मत्स्यावतारादि तु चरितानि इत्युच्यन्ते परन्तु श्रीकृष्णावतारे चरितम् इत्यपेक्षया सर्वदा श्रीकृष्णलीला इत्येव उच्यते। यतोऽहि श्रीकृष्णावतारः सम्पूर्णः दिव्यलीलायुक्तः।

सम्राट् परीक्षित् स्व अन्तिम दिनेषु शुकमुनेः दिव्य भागवत कथां आस्वादनं करोति। तस्य अन्तिम क्षणेषु सः शुक मुनिं पप्रच्छ "मोक्ष साधनाय मह्यं ज्ञान मार्गं प्रसादयतु" इति। क्लिष्टमस्ति चेत् अपि मम मोक्षपिपासा निवृत्यर्थं यं कमपि मार्गं स्वीकर्तुम् सिद्धः अस्मि। तदा शुकमुनिः उवाच मार्गस्तु न क्लिशटः सर्वो मार्गः एकस्मिन् एव लक्ष्ये तिष्ठति।

"वासुदेवपरं ज्ञानं वासुदेवपरं तपः।

वासुदेवपरो धर्मो वासुदेवपरा गतिः।" इत्युवाच शुक मुनिः।

**श्रीकृष्णजननकथा : -**

मथुरादि त्रयाणां राज्यानां भोज राज्यम् इति नाम, तस्य कंस नामकः भोजराजा आसीत्। कंसस्य पिता उग्रसेनः। वास्तविकतया उग्रसेनः एव राजा परन्तु केवलं नाम्ना सः राजा परिपालनाधिकारं सर्वं कंसस्य पार्श्वे एव आसीत्। कंसः महान् अधर्मीः वर्तते। धर्मस्य विनाशे तस्य रुचिर्वर्तते। सः कंसः वञ्चकः क्रूरः च बभूव। कंसः स्वभगिन्याः देवक्याः विवाहोत्सवं विशेषरूपेण सामायोज्य प्रीत्या भगिनीं तस्याः पतिं च रथे उपावेश्य सः स्वयं सारथिः बभूव। तदा तस्मिन् मंगलावासरे निर्गतः एकां अशरीर वाणिं सर्वे श्रुतवन्तः - अस्यास्त्वां अष्टमो गर्भः हन्तायां वहसे "अबुधा"। अबुधा इत्युक्ते मूर्खः इति। तां अशरीरवाणी कंस वदति - एषा देवकी, यस्याः कृते भवान् अद्य रथं मार्गे चालयति तस्याः गर्भे जनितः अष्टम पुत्रः त्वाम् यमस्य मार्गं नेष्यति। इदं वचनं श्रुत्वा क्रुद्धः कंसः खड्गेन देवक्याः हननाय प्रयतते। तदा वसुदेवः स्वपत्न्याः रक्षणाय वदति - आवयोः प्रत्येक सन्तानं भवतः हस्ते ददामः। हानिकारः आवयोः पुत्रः एव खलु तव भगिन्यै जीवनदानं कृपया यच्छतु इति। खड्ग प्रहारवेलायां उपायामिदं श्रुत्वा स्थगयति कंसः।

विवाहानन्तरं सर्वासां कन्यायाः गृहप्रवेशः विशेषः भवति परन्तु देवक्याः विवाहानन्तरं कारागृहप्रवेशः जातः। प्रति शिशोः जनन समय रोदनमेकमेव मातरं सन्तोषयति परन्तु कारागृहे वसुदेव देवक्योः शिशु रोदनं तयोः दुःखभीति कारणमेव, अभूत। यथैव शिशुः जन्मप्राप्यते तथैव कंसः आगत्य जनित नवशिशुं स्वहस्तेन मारयति। प्रत्येक शिशु मरण दुःखं तौ बहु पीडयति। एवं प्रथमात् षष्ठम शिशु पर्यन्तं तान् मृत्युमुखे प्रेषितवान्।

उपरि वैकुण्ठे श्रीमहाविष्णुं सर्वे प्रार्थयन्ति दुष्ट कंसस्य पापाः अत्यधिकाः जाताः। कृपया भवान् अवतरतु पृथिव्यामिति। श्रीमहाविष्णोः श्रीकृष्णावतारस्य समयः आसन्नः। अवतार दर्शन भाग्यं प्राप्तुं सर्वे देवाः मानव रूपेण पृथिव्यां जन्म स्वीकुर्वन्ति। आदिशेषोऽपि पृथिव्यां अवतरति श्रीकृष्णस्य सेवार्थम्।

योगमाया श्रीमहाविष्णोः आदेशानुसारं देवक्याः गर्भात् शिशुं रोहिन्याः गर्भे परिवर्तयति। स एव बलराम इति नाम्ना प्रसिद्धः। देवकी पुनः अष्टम गर्भं धारयति। रात्रौ रोहिणी नक्षत्रे अष्टम तिथौ कारागृहे देवक्याः अष्टम सन्तानस्य जननं अभूत्। माता इति पवित्र स्थानं पुनः अलंकरोति देवकी। श्रीमहाविष्णुः स्वमात्रे कष्टं न देयम् इति स्वयमेव वैकुण्ठात् क्रीडाशामग्रीम् आनयति। तद्यथा शंकचक्रपद्मगधादि स्व चतुर्भुजेषु धृत्वा अवतरति। वसुदेवः पितृ रूपेण प्रसन्नता अपेक्षया पुत्र रक्षणाय अधिकं आकुलः भवति। यः विष्णुः कृष्णावतारे स्व मातुः दुःखस्य अपहरणाय न रोदिति, क्रीडादिकम् आनयति सः अधुना पितुः चिन्तां दृष्ट्वा झटिति संपूर्ण मथुरां मूर्चयति। पिता वसुदेवः आनन्देन भगवन्तं नमति। पुनः वसुदेवः स्व लोह श्रृङ्खलान् दृष्ट्वा चिन्ताकुलो भवति। योगमाया भगवत् कैङ्कर्याय स्व मायया मथुरां शाययति। वसुदेवस्य कारगृह बन्धनानि च लुप्यन्ते। वसुदेवः प्रसन्नेन स्व पुत्रं साक्षात् श्रीकृष्णं स्व हस्ते स्वीकरोति। एकस्मिन् पेटायां श्रीकृष्णं जागरूकतया संस्थाप्य कारागृहात् व्रज राज्यं नयति।

गमनवेलायां वृष्टिः विपरीतमासीत्। तस्मात् श्रीकृष्णस्य वर्षायाः रक्षणाय आदिशेषः स्वयं छत्र रूपेण स्थित्वा कृष्णं सेवयति। यमुना नदी उत्साहेन निरीक्ष्यमाणा आसीत् भगवतः दिव्यावतार दर्शनाय। पृष्ठे सर्परूप छत्रः पुरतः यमुना नद्याः वेग प्रवाहः, नदी तीरस्तु न दृश्यते। तस्मिन् समये अपि पुत्र रक्षणाय वसुदेवः यमुना नद्यां प्रविशति। यमुना नद्याः इच्छा आसीत् भगवतः चरणकमलयोः स्पर्शनाय। अतः उत्साहेन यमुना कृष्णस्य पाद स्पर्शनाय स्व तरंगोन्नतिं वर्धयति। यमुना नद्यां कटिभाग पर्यन्तं जल प्रवाहे अपि वसुदेवः दृढरूपेण मनसि श्रीमहाविष्णुं स्मरन् अग्रे गच्छति।

यमुनायाः भक्तिः तरंग रूपेण प्रतिक्षणं वर्धते वसुदेवस्य शिरः पर्यन्तं जलमाग्तम्। तथापि वसुदेवः आत्मविश्वासं न अत्यजत् नापि यमुना स्वभक्तिं त्यक्तवती। श्रीकृष्णः उभयोः श्रद्धां दृष्ट्वा आनन्दमनुभवति। स्व मृदुपादं बहिर् संस्थापयति, यमुना नदी झटिति स्व उन्नत तरंगैः कृष्णस्य पादाभिवन्दनं कृत्वा अतिप्रसन्ना जाता। सा यमुना झटिति श्रीकृष्णस्य व्रजराज्यं गन्तुं मार्गं ददाति। वसुदेवः अकस्मात् वेग तरंगाणां स्थगनं, नद्याः द्विधा विभजनं आश्चर्यचकितः जातः। वसुदेवः एवं व्रज राज्यं प्राप्य तत्र नन्दगोपस्य गृहे श्रीकृष्णं संस्थाप्य यशोदायाः पुत्रीं तेन सह कारागृहम् आनयति।

कारागृहे वसुदेवस्य प्रत्यागमने सर्वं यथा पूर्वमासीत् तथैव जातः। सर्वेषां मूर्छा अपगतः। राजा कंसः आगत्य अष्टम शिशुं मारयितुम् उद्युक्तो भवति। तदा वसुदेवः यशोदायाः पुत्रीं दर्शयति दुःखेन। तदा सा पुत्री योगमाया स्वनिजस्वरूपे आगत्य कंसम् अष्टम सन्तानजनन भीतिं जनयित्वा सा अन्तर्भूता। तत्श्रुत्वा कंसः क्रोधेन भीत्या चिन्तया च तिष्ठति।

व्रज राज्ये सर्वे श्रीकृष्णस्य जननमहोत्सवम् आमनन्ते। सर्वे देवाः मानव, गौः रूपेण च श्रीकृष्णावतारस्य दर्शननानंदं जननानंदं च अनुभवन्ति।

श्रीकृष्ण लीलाः अनन्ताः अद्भुताः आह्लादकरश्च। आ अवतारपरिसमाप्तिपर्यन्तं श्रीकृष्णस्य लीलाः अतिमधुराः प्रसिद्धाश्च। जननात् आरभ्य श्रीकृष्णस्य लीलान् श्रीमद्भागवते अनुभवितुं शक्नुमः।

**।। कृष्णाय तुभ्यं नमः।।**



# श्रीहयग्रीववैभवम्

- का. इ.वरददेशिकः
चरवाणी -९७९०५८५६०३

भगवतः श्रीमन्नारायणस्य सहस्रसङ्ख्याकेषु अवतारेषु अन्यतमो हयग्रीवावतारः। स अनिरुद्धांश इति कथ्यते। सर्ववागीश्वरः सर्ववेदमयः उद्गीथप्रणवमूर्तिः इत्यादीनि प्रसिद्धानि नामानि अस्य।

**अवतारवृत्तान्तम्** - एकदा चतुराननो ब्रह्मदेवोऽतीव दुःखित आसीत्। मधुकैटभनामकौ द्वौ असुरौ तस्मात् वेदान् अपहृतवन्तौ। वेदाः सृष्टिप्रक्रियायाः मूलकारणीभूताः। यदा तावत् भगवान् लोकमसृजत् तदा तेन वेदा ब्रह्मदेवाय उपदिष्टाः। चत्वारो वेदा ब्रह्मदेवस्य मानसपुत्राः सनत्सनातसनन्दनसनत्कुमारादय इति पौराणिकाः कथयन्ति। द्वौ असुरौ तेषामपहरणं कृत्वा पातालल्लोकं नीतवन्तौ। वेदान् विना सृष्टिप्रक्रिया एव स्थगिता भवेत्। अतः किङ्कर्तव्यविमूढः सन् सः ब्रह्मदेवः क्षीरार्णवनिकेतनं हृषीकेशं प्रति गत्वा तं प्रणिपत्य एवमाह ''हे भगवन्! असुरौ द्वौ मम मानसपुत्रान् वेदान् चोरितवन्तौ। अनन्यशरणोऽहं भवतां समक्षम् आगत्य सप्रश्रयं प्रार्थये वेदानां समुदानयनार्थम्''- इति। तदा भगवान् वासुदेवः हयग्रीवावतारम् अवतारयामास। अयम् अवतारः कश्चन विलक्षणोऽवतारो यत्र हयवन्मुखं भवति। शेषं सर्वं मनुष्यवत् शरीरम्। किन्तु अप्राकृतम्। हयो नाम अश्वः। हयवद्ग्रीवा यस्य सः हयग्रीवः। अयं भगवान् पातालल्लोकं प्रविश्य हलाहलं नामकं ध्वनिं कृतवान्। एतत् श्रुत्वा भीत्या पलायनं कृतवन्तौ असुरौ जित्वा वेदान् आनीतवान्। पुनर्ब्रह्मदेवाय विधिवद् यथापूर्वम् उपदिष्टवान्। एवं चतुराननः प्रत्यहं हयग्रीवाराधनं कुवन्नस्ति ज्ञानसिद्धये। अत्र हलाहल इति पदे स्वारस्यं वर्तते। संस्कृते हल् नाम व्यञ्जनाक्षराणि तथा अहल् नाम हल्व्यतिरिक्त अच् अक्षराणि नाम स्वरवर्णाः। एवं हलाहल इति पदेन समग्रः शब्दराशिः द्योत्यते। वेदाः सर्वे शब्दराशीनामकार एव। अनेन अयं हयग्रीवो वेदमयो वेदपुरुषश्च इति स्वारस्येन सिद्ध्यति।

**भगवता हयग्रीवेन अनुगृहीताः आचार्यसार्वभौमाः**

**श्रीरामानुजाचार्यः** - श्रीरामानुजाचार्यः विशिष्टाद्वैतसिद्धान्तस्य प्रमुखः प्रवर्तकः। अस्य आचार्यस्य नाम यामुनमुनिः। तेन अन्तिमकाले रामानुजाचार्य आदिष्टो यत् भगवद्बादरायणप्रणीतानां ब्रह्मसूत्राणां व्याख्या एका कर्तव्येति। तदनुगुणं रामानुजाचार्येणापि भाष्यं कृतम्। कश्मीरप्रदेशे विद्यमानायां शारदासभायां विद्वत्पुरस्सरं ब्रह्मसूत्रभाष्यस्य प्रस्तुतिमकारयत्। तदा प्रहृष्टमना देवी सरस्वती साक्षादवतीर्य तस्य श्रीभाष्यमिति नामकरणं कृतवती। अनन्तरं सा तस्याः आराध्यमूर्तिं हयग्रीवं रामानुजाचार्याय दत्तवती। इयं हयग्रीवमूर्तिः ब्रह्मणा सरस्वत्यै दत्ता। इयं मूर्तिः अद्यत्वेऽपि मैसूर् क्षेत्रे विद्यमाने परकालमठे शोभते।

**श्रीवादिराजतीर्थः** - एवमेव माध्वसम्प्रदायेषु अन्यतम आचार्यः श्रीवादिराजतीर्थः। स आचार्यः प्रतिदिनं हयग्रीवाय भक्ष्यं निवेदयति। हस्तमुद्धृत्य शिरोपरि नैवेद्यभाण्डकं स्थापयित्वा एवमुच्चैः स्वरैः घुष्यते -

**न हयग्रीवात् ....सीदति।**

(हयग्रीवमतिरिच्य नास्ति किमपि लोकाय हयग्रीवाय शरणागतिं करोति सः कदापि न क्षीयत इति)

तदा हयग्रीवः अश्वरूपं धृत्वा परोक्षमागत्वत्या पुरतो विद्यमानं पादद्वयं आचार्यस्य स्कन्धे संस्थाप्य प्रसादं भुक्त्वा गच्छति। यदवशिष्यते तदेव भोजनत्वेन स्वीकरोति आचार्यः। ''हयग्रीव पण्डी'' इति प्रसादस्य आख्येति कथ्यते।

**श्रीवेदान्तदेशिकः** - श्रीवेदान्तदेशिको भारतवर्षस्य श्रेष्ठः कविदार्शनिकश्च श्रीदेशिकानां शताधिका ग्रन्था वर्तन्त इति सुधियः जानन्त्येव। आचार्यस्य जननं काञ्चीपुर्यां अभूत्। वैनतेयेन आदिष्टः स आचार्यः तिरुवहीन्द्रपुरनामके दिव्यक्षेत्रे हयग्रीवोपासनमकरोत्। तदा सन्तुष्टो हयग्रीवः पुरत आगत्य तं स्वस्य मुखस्रावं अनुगृहीतवान्। अत एव हयग्रीवः आचार्यस्य जिह्वाग्रे सर्वदा तिष्ठतीति कथ्यते। अत एव अनेन लब्धः कवितार्किकसिंह इति बिरुदपि अन्वर्थः।

**हयग्रीवोपरि ....उपास्महे।।**

**(वेदान्तदेशिकविरचितहयग्रीवस्तोत्रम्)**

प्रसिद्धोऽयं श्लोकः प्रायः सर्वत्र पाठारम्भात् पूर्वं पठ्यते। अयं भगवान् ज्ञाननन्दस्वरूपो यथा स्फटिकमणिः भासते तद्वद् भगवतः शुद्धसत्वशरीरोऽपि चकास्ति। लोके याः विद्याः सन्ति तासां सर्वासामाश्रयः हयानन इति तात्पर्यः।

**हयग्रीव ..... जह्नुकन्याप्रवाहवत्।।**

**(वादिराजकृतहयग्रीवस्तोत्रम्)**

यः त्रिवारं हयग्रीवोच्चारणं करोति तस्य वाणी गङ्गाप्रवाहवत् निस्सरतीत्यर्थः।

**अपि क्षणार्धं कलयन्ति ये त्वां**
**आप्लावयन्तं ....क्षमन्ते।।**

**(वेदान्तदेशिकविरचितहयग्रीवस्तोत्रम्)**

**वागर्थसिद्धिहेतोः**
**पठत हयग्रीवसंस्तुतिं भक्त्या।।**

(वेदान्तदेशिकविरचितहयग्रीवस्तोत्रम्)

ये वाक्पटुत्वमिच्छन्ति ते सर्वेऽपि अनन्या भक्त्या हयग्रीवोपासनं करोत्विति अन्ते निगमनं करोति आचार्यः।।

अस्य भगवतोऽवतारः श्रावण्यां पौर्णमास्यामभूदिति पुराणे वर्णितमस्ति। तद्दिने बहुत्र **हयग्रीवजयन्तीति** आचरन्ति जनाः।।



# पुराणेषु श्रीवेङ्कटाचलधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायण

चरवाणी - ९४९४२४८३४८

सम्प्रदाये कर्णाटकहरिदासश्रेष्ठानां स्मरणावसरे

**नमः श्रीपादराजाय नमस्ते व्यायोगिने।**

**नमः पुरंदरार्याय विजयार्याय ते नमः।।** इति श्लोकः उच्यते।

अस्मिन् श्लोके आदौ श्रीपादरायवर्याणां स्मरणं कृतम्। एते महापुरुषाः श्रीमन्मध्वाचार्यपरम्परायां स्वर्णवर्णतीर्थ-करकमलसञ्जाताः वर्तन्ते। तदानींतन काले चन्द्रगिरिराज्ञा श्रीळुवनरसिंहरायनृपतिना प्रदत्त-भक्तिगौरवादरपूजासत्कारान् श्रीपादरायवर्याः प्राप्तवन्तः। श्रीपादरायवर्याः श्रीनिवासं भक्त्या संसेव्य स्वतपसः शक्त्या महिमादिकम् अनुग्रहपूर्वकं प्रदर्श्य अनेकानां भक्तानां बाधाः दूरीकृत्या वाग्व्रज नामकं ग्रन्थं अलिखन्। श्रीपादरायवर्याः कन्नडभाषायां पदसाहित्यरचनायाः प्रारम्भं कृत्वा व्यासवादिराज-पुरंदरकनकदासेभ्यः मार्गदर्शकाः अभवन्। श्रीपादरायवर्याः श्रवणमात्रेण सकलेष्टार्थान् अनुगृण्हन्ति। नरसिंहतीर्थस्य समीपे कोलार् जनपदे मुळबागिल् प्रान्ते दिव्यबृन्दावने विराजमानाः वर्तन्ते। एते श्रीपादरायवर्याः कन्नडभाषायां देवतास्तोत्राणि वैराग्यभावप्रबोधकसंकीर्तनानि मध्वमतप्रबोधकीर्तनानि च विलिख्य वायुदेवस्य अवतारत्रयवर्णनात्मककन्नडलघुवायुस्तुतिः इव मध्वनाम्ना सह श्रीवेङ्कटेश्वरस्त्युत्यात्मककीर्तनानि विलिख्य गानं कृतवन्तः।

कीर्तनानि सङ्गीतप्रधानात्मकानि। एतानि कीर्तनानि पामरजनाः अपि सुलभतया गात्वा प्रशान्तचित्तं प्राप्तुं योग्यानि सन्ति। श्रीपादरायवर्याणां कीर्तनानि सरलकन्नडपदैः द्राक्षापाकयुक्तानि अपि च मनोरञ्जकरागतालैः गातुं भावयुक्तम् अभिनेतुं च अनुकूलानि योग्यानि च वर्तन्ते। एतेषां कृतिषु तोडिरागे कंगलिद्ध्यातको कावेरि रंगननोडद वंदिपे निनिने गणनाथ, भूषणके भूषण इदुभूषण रंगनाथननोडुवबन्नि व्यर्थ वल्लवे जन्मव्यर्थ वल्लके इत्यादि कीर्तनानि सुप्रसिद्धानि। साम्प्रतं अनेके गायकाः सङ्गीतकार्यक्रमेषु एतेषां कीर्तनानि गायन्ति। भ्रमरगीतानि वेणुगीतानि च एतेषां कृतयः एव। यदा एतेषां गीतानां गानं भवति तदा भगवतः श्रीकृष्णस्य दिव्यमूर्तेः साक्षात्कारः अवश्यं भविष्यति। प्रायशः बारोमनेगे गोविन्द इति भक्तिरसयुक्तकीर्तनं सर्वे गातवन्तः शिल्पकवित्वसृष्टिः एतैः एव कृता। प्रधानतया श्रीपादरायवर्येण कृतानि श्रीवेङ्कटेश्वरकीर्तनानि स्थालीपुलाकत्यायेन पश्यामः।

हरे वेङ्कटशैलवल्लभ पोथबेकु एन्न।
दुरितदूर नी नल्लदेजगदोळु पोरेवरनाकाणे निन्नाणे।।

हरे वेङ्कटशैलवल्लभ! मां रक्षतु। ममक्लेशान् भवान् दूरीकरोति। अस्मिन् विश्वे त्वमेव मां रक्षसि अन्यः यः कोऽपि नास्ति इति भावयामि। एतत् शतप्रति शतं सत्यम्।

**इन्दिरेश अरविन्दनयन एन्न तन्दे तायि नीने।**
**पोन्दि दवर अघवृन्दवक ळेव मन्दराद्रि धरने।। श्रीहरिये।।**

इन्दिरेशः अरविन्दनयन! त्वमेव मम माता च पिता च। त्वम् आश्रितानां भक्तानां पापसमूहम् अपनयसि त्वं मन्दरगिरिधरकूर्माकृतिदेवः भवसि।

आरुनिन्न होरतेन्नपोरेवरो नीरजाक्ष हरिये अ-
पारमहिम पुराणपुरुष घोरदुरितगळ दूरमाडिसो।।

त्वं विना अन्यः को पि मां रक्षितुं समर्थः नास्ति। त्वम् अपारमहिमायुक्तः पुराणपुरुषः नीरजाक्षः च भवसि। हे हरे! मम घोरादुरितादिकं दूरीकरोतु।

मङ्गळाङ्ग महनीय गुणार्णव गंगोदितपादा
अङ्गजपित अहिराजशय्य श्रीरङ्ग विठल दोरेये।। श्रीहरिये।।

मङ्गलळाङ्ग! महनीयगुणार्णव! गंगोदितपाद! मन्मथजनक! शेषशयन! हे श्रीरङ्गविटल श्रीहरे! मां राक्षतु! अस्मिन् कीर्तने श्रीनिवासस्तुत्यर्थं प्रयुक्तानि विशेषपदानि सर्वाण्यपि श्रीहरिलीलावतारान् स्मारयान्ति। श्रीपादरायवर्यैः लिखितेषु अन्येषु कीर्तनेषु भूषण केभूषण इदु भूषण शेषगिरिवास (येले) श्रीवेङ्कटेश इति कीर्तनं सुप्रसिद्धम् अस्ति। अस्मिन् कीर्तने पल्लविमध्ये प्रयुक्तस्य भूषणपदस्य अर्थः सौन्दर्यः भवति। अस्य पर्वतस्य उपरि श्रीनिवासः अस्ति इत्येव सौन्दर्यविशेषः भवति। श्रीवादिराजवर्याः एतानि वचनानि भागवगर्भिततया एवं प्रकारेण अकथयन्।



सर्वगः सर्वविद्भानुः विष्वक्सेनो जनार्दनः।

Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
### २०२० अक्टोबर् १६ तः २४ पर्यन्तम्

१६-१०-२०२०
भृगुवासरे
प्रातः
तिरुच्चि उत्सवम्
रात्रौ - महाशेषवाहनम्

१७-१०-२०२०
स्थिरवासरे
प्रातः लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

१८-१०-२०२०
भानुवासरे
प्रातः सिंहवाहनम्
रात्रौ -
मौक्तिकमण्डपम्

१९-१०-२०२०
इन्दुवासरे
प्रातः कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

२०-१०-२०२०
भौम्यवासरे
प्रातः आन्दोलिकासेवा
रात्रौ - गरुडवाहनम्

२१-१०-२०२०
सौम्यवासरे
प्रातः हनुमद्वाहनम्
रात्रौ - गजवाहनम्

२२-१०-२०२०
बृहस्पतिवासरे
प्रातः
सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

२३-१०-२०२०
भृगुवासरे
प्रातः स्वर्णरथोत्सवम्
रात्रौ - अश्ववाहनम्

२४-१०-२०२०
स्थिरवासरे
प्रातः चक्रस्नानम्
रात्रौ - तिरुच्चि उत्सवम्

